परात्रिंशिकाविवृत्यादिषु स्मृतानि मतशास्त्रादिवचनान्यवश्यं परीक्षणीयानि। क्षेमराजो न केवलं नारायणकण्ठम्, तत्पुत्रं रामकण्ठमपि स्मरतीत्युपोद्घातेऽत्रैव (पृ० ६३) द्रष्टव्यम्। तेन रामकण्ठोऽपि क्षेमराजात् पूर्वतनस्तत्समसामयिको वा वृद्धो विद्वानिति मन्तव्यम्। आक्सफोर्डविश्वविद्यालयस्थो डॉ० ए० साण्डरसनमहोदयो जयद्रथयामलस्याऽभिनवगुप्तेन तन्त्रराजभट्टारकनाम्ना स्मृतस्य संस्करणं सज्जीकरोतीति सूचयत्यस्मान् पेरिसनगरस्थफ्रेंचराष्ट्रीयविद्यासंस्थानस्य वरिष्ठो विद्वान् डॉ० आन्द्रे-पादुमहोदयः। अभिनवगुप्तेन (प० त्रिं० वि०, पृ० २३५) तिलकशास्त्रं स्मर्यते। तदेतत् तिलकशास्त्रं [1]ज्ञानतिलकाद्भिन्नमभिन्नं वेति परीक्षणीयम्। मुद्रिते परातन्त्रे परातन्त्रस्य परामतस्य वा वचने नोपलभ्येते। भट्टगङ्गाधरस्य स्तोत्रमृजुविमर्शिन्यां (पृ० ६९, ८०) स्मर्यते, रससारसंग्रहवचनं च तत्र (पृ० १०९) संगृह्यते। रससारसंग्रहस्य च कर्ता कश्चन गङ्गाधर इति स्तोत्रकारस्य रससारसंग्रहकारस्य चैक्यविषये सुदृढं प्रमाणमन्वेषणीयम्। कर्मकाण्डक्रमावल्यां सूचितस्य (पृ० ३१-३२) लीलावतीशिवागमस्योपपुराणत्वेनोल्लेखो डॉ० आर० सी० हाजरामहोदयस्य ग्रन्थे (स्टडीज इन दी उपपुराण्स, I. १३) एकाम्रपुराणधृतोपपुराणसूचीप्रामाण्येन दृश्यत इव। सौरसंहितामातृका प्राचीना डॉ० तून-गान्द्रियानग्रन्थे (पृ० १११) विवृता। नेत्रतन्त्रोद्धृतो (१३।१७-२७) विषयस्तत्रान्वेषणीयः। किञ्च, "अन्यथा देवपाण्डित्यम्" (म० म० प०, पृ० ६) इति श्लोको य० च० (पृ० २५१) इत्यत्र—"अन्यथा लोकपाण्डित्यं वेदपाण्डित्यमन्यथा। अन्यथा तत्पदं शान्तं लोकः क्लिश्नाति चान्यथा॥" इत्येवं पाठान्तरेण सह हरप्रबोधशैवाचार्यवचनत्वेन स्मर्यते। अत्रैव दक्षिणवाममार्गशब्दौ प्रयुक्तौ दृश्येते।

आनन्दशासन-उदयाकरपद्धति-ऊर्मिकौल-कालिकाक्रम-कुलगह्वर- कुलरत्नमाला-क्रमसद्भाव-क्रियाकालगुणोत्तर-तन्त्रसद्भाव-तोतुल-त्रिकसार - त्रिशिरोमत - देव्यायामल-नन्दिशिखा-निशाचार-पराख्यसंहिता-भैरवागम-माधवकुल-मुकुटसंहिता - वीरावलीशास्त्र-शिवतनुशास्त्र-संवित्प्रकाश - सङ्केतपद्धति - सिद्धयोगीश्वरीमत - [2]स्वच्छन्दसंग्रहसदृशानां ग्रन्थानां भूयांसि महत्त्वपूर्णानि वचनानि समुपलभ्यन्ते। तेषु केषाञ्चन मातृका अपि लभ्यन्ते। यदि तत्राऽत्रत्यानि वचनानि समुपलभ्येरंस्तर्हि तेषां शोभनं संस्करणमतीवावश्यकम्। किञ्च, नेपालमातृकाः प्रायोऽशुद्धिभूयिष्ठा वर्तन्ते। तदाधारेण केचन विद्वांसो नूतना काचन संस्कृतभाषापद्धतिरत्रोपयुक्तेति कल्पयन्ति। तैस्तेषां तेषां ग्रन्थानां प्रथमं नेपालेतरमातृका दृष्ट्वैव, यदि ताः समुपलभ्यन्ते, स्वमतस्थापनाय प्रयतनीयम्, नात्र त्वरा विधेया।

क्षेमराजेन स्वच्छन्दोद्योते दीक्षाप्रकरणे (III. ९४) कैरणव्याख्यातृमतं समालोच्यते। तत्रैव नैकत्र स्वच्छन्दतन्त्रव्याख्याकारं भुसुकं स स्मरति। "यत्तत्कुर्वाणा उप-

---

१. डॉ० मार्क-डिच्कोफस्कीमहोदयेन कस्यचन ज्ञानतिलकस्य मातृकाप्रतिकृतिः संगृहीता। तस्याः परीक्षणमपेक्षितम्।

२. स्वच्छन्दसंग्रहस्य मातृका मद्रपुरीराजकीयपुस्तकालये वर्तते। तत्र दीपिकाधृतानि वचनानि सर्वाण्युपलभ्यन्त इत्यपि मार्कमहोदय एव सूचयति।

Courtesy: Shri Tarun Dwivedi, Surviving Son of Late Vraj Vallabh Dwivediji (15 Jul 1926 - 17 Feb 2012)

हास्याः" (I. ६) इति नेत्रोद्योतवचनेन च तस्यापि प्राचीनं व्याख्यानान्तरमासीदिति सूच्यते। कुलपञ्चाशिका-कालीकुलपञ्चाशत्सदृशानां नाम्नामपि परीक्षणमपेक्षितम्, यतो हि कासुचन मातृकास्वेक एव ग्रन्थो भिन्नैर्भिन्नैर्नामभिर्लिखितः समुपलभ्यते।

एवं प्रासङ्गिकान् कांश्चन विषयान् समुपस्थाप्य परिसमाप्यतेऽयमुपोद्घातः। अवसरेऽस्मिन् वयं तान् पूर्वाचार्यान् आधुनिकांश्च ग्रन्थप्रणेतॄन् स्मरामः, यैः क्षुण्णेन हि पथाऽस्माभिरेषा विद्यायात्रा सम्पादिता। यत्र क्वचन मतान्येतेषां समालोचयतामस्माकं चेतसि तान् प्रति समादरो नाणुमात्रमपि क्षणमप्यलुप्यत। सर्वे च ते महानुभावाः कृतसहायाः पुनरप्यत्र स्मर्यन्ते, ये हि सात्वतसंहिताया उपोद्घाते स्मृताः। अन्ते च गच्छतः स्खलनं क्वापीति न्यायेन क्षाम्यन्ते मनीषिण इति।

रामनवमी, संवत् २०४० विदुषां वशंवदः

वाराणसी (२१-४-८३ ई०)। व्रजवल्लभद्विवेदः, शास्त्रचूडामणिः

Courtesy: Shri Tarun Dwivedi, Surviving Son of Late Vraj Vallabh Dwivediji (15 Jul 1926 - 17 Feb 2012)

# विषयसूची



Courtesy: Shri Tarun Dwivedi, Surviving Son of Late Vraj Vallabh Dwivediji (15 Jul 1926 - 17 Feb 2012)

Courtesy: Shri Tarun Dwivedi, Surviving Son of Late Vraj Vallabh Dwivediji (15 Jul 1926 - 17 Feb 2012)

